उत्क्रम्य सम्भवन्त्यर्चिरह शुक्ल तथोत्तरम् ।
अयन देवलोक च सवितारं सवैद्युतम् ॥

ततस्तत्पुरुषोऽभ्येत्यामानवो ब्रह्मलौकिकान् ।
करोति पुनरावृत्तिस्तेषामिह न विद्यते ॥

सत्य त्रैकाल्यसिद्धं वस्तु सभवन्ति । पुरुषोऽभ्येत्यमानव । स चामानव पुरुष उपासकान् ब्रह्मलौकिकान् ब्रह्मलोकसहभाजः करोति । तेषामुपासकानामपुनरावृत्ति । महाप्रलये ब्रह्मलोके विनष्टे ब्रह्मणा सह मुक्ता सर्वे सदाशिवतादात्म्यं प्राप्नुवन्तीति ।

तथा च तैत्तिरीयकोपनिषदि श्रूयते—

"वेदान्तविज्ञानसुनिश्चितार्थास्सन्यासयोगाद्यतय शुद्धसत्वा ।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥"

परामृतादिति ल्यब्लोपे पञ्चमी । परामृत प्राप्य सदाशिवेनैकीभूय परिमुच्यन्ति न पुनर्भवन्तीति श्रुतेरर्थ इत्यलमतिविस्तरेण ॥ ४५ ॥

यत्रानन्द स्फुरति परमज्योतिरालोकजन्मा
भुज्यन्ते च स्वयमुपनता यत्र [1] दिव्यास्सुभोगा ।
यत्रावृत्तिर्न भवति पुन पञ्चमाध्व[2]प्रसिद्ध
तद्वैराग्य पदमपि शिव प्राप्यते त्वत्प्रसादात् ॥ ४६ ॥

**यत्रानन्द** इति । यत्र पदे पञ्चमाध्वनि । आनन्द स्फुरति प्रकाशते । परमज्योतिरालोकजन्मा परमज्योतिष सदाशिवतत्वस्य आलोकात् जन्म उत्पत्तिर्यस्य स इति बहुव्रीहिर्व्यधिकरण । जन्माद्युत्तरपद इति पञ्चमीव्यधिकरणबहुव्रीहि । यद्वा सप्तमीविशेषणे बहुव्रीहौ इति ज्ञापकात् समास । भुज्यन्ते सुकृतिभिरिति शेष । स्वयमुपनता अभिलाषोपनीता इत्यर्थ । यत्र पञ्चमाध्वनि । दिव्या दिवि भवा । सुभोगा. शोभनानि वस्तूनि । यत्रावृत्ति यत्रोपगताना सुकृतिनामावृत्तिर्गर्भगोलप्राप्तिर्न भवति पुन । पञ्चमाध्वप्रसिद्ध पञ्चमश्चासावध्वा च पञ्चमाध्वा स इति प्रसिद्ध । तद्वैराग्यं पद वैराग्यस्थान ब्रह्मलोक इति यावत् । शिव ! प्राप्यते लभ्यते त्वत्प्रसादात् भवत्प्रसादात ।

---

[1] च दिव्याश्च ।  [2] क ख घ च प्रसिद्ध तद्वैराज ।

अत्रेत्थं पदयोजना - यत्र परमज्योतिरालोकजन्मा आनन्द स्फुरति । यत्र स्वयमुपनता दिव्या सुभोगा सुकृतिभिर्भुज्यन्ते यत्र पुनरावृत्तिर्नास्ति । तत्पञ्चमाध्वप्रसिद्ध वैराग्य पदमपि । हे शिव ! तत्प्रसादात्सुकृतिभिः प्राप्यते ।

अयमर्थ —शिवसायुज्यकाङ्क्षिणा मुमुक्षूणामध्वान पञ्च । अर्चिरध्वा प्रथम सूर्याध्वा द्वितीय । स च दिवसशुक्लपक्षोत्तरायणप्राप्यनिबन्धन । वैद्युताध्वा तृतीयः । अमानवपुरुषलोको विरजानदीतीरसमीपवर्ती चतुर्थोऽ-ध्वा । ब्रह्मलोक पञ्चमोऽध्वेति विवेक । आदौ मुमुक्षु क्रमशार्चिर्लोकं गत्वा तत्र सुखान्यनुभूय तदनन्तरं सूर्यलोक गत्वा तत्रत्यान् भोगान् सभुज्य तदनतर वैद्युत लोक प्राप्य तत्र सुखमुषित्वा तत परंममानवपुरुषेण सह विरजानदी तीर्त्वा अमानवपुरुषलोक प्राप्य तत्र चिरकालमुषित्वा, ब्रह्मलोकसुखान्यनुभूय ब्रह्माण्डकटाहभङ्गरूपमहाप्रलयकाले हिरण्यगर्भनामकेन ब्रह्मणा सह सर्वे सदाशिवतत्त्वे विलीयन्त इति अर्चिरादिमार्गगामिना गतिविशेषप्रतिपादनसक्षेप इत्यनुसन्धेयम् । ४६ ॥

> त्वय्यात्मानं निहितमखिलैस्त्वद्गुणै· सम्प्रयुक्तं
> स्वच्छादर्शे मुखमिव चिरं चेतसा निश्चलेन ।
> ये पश्यन्ति त्रिनयन मनोवाञ्छितार्थप्रसूति
> स्तेषामाविर्भवति सुधियामेव धर्म समाधि ॥ ४७ ॥

**त्वय्यात्मान**मिति । त्वयि भवति । आत्मान जीवात्मानम् । निहित निक्षिप्तम् । प्रतिफलितमिति यावत् । अखिले समस्ते । त्वद्गुणैर्भ-वद्धर्मैः ज्ञानवैराग्यादिभि कपालधारणादिभिश्च । सम्प्रयुक्तम् । स्वच्छादर्शे निर्मलमुकुरे । मुखमिव वदनमिव । यथा मुकुरप्रतिबिम्बितमुख मुकुरधर्म-सयुक्त प्रतिभाति एव जीवात्मा त्वयि प्रतिबिम्बितस्त्वद्धर्मसम्प्रयुक्त प्रतिभातीति भाव । [चिरं चेतसा निश्चलेन]त ये पश्यन्ति हे त्रिनयन ! मनोवाञ्छि-तार्थप्रसूति मनसावाञ्छितानामर्थाना प्रसूति सिद्धि । तेषा भक्तानाम् । आविर्भवति । हि यस्मात्कारणात् । सुधिया विदुषामेव धर्म समाधि. । आत्मनात्मदर्शनमेव समाधिशब्दार्थ इत्यर्थ ।

अत्रेत्थ पदयोजना—त्वय्यात्मानमखिलैस्त्वद्गुणै सम्प्रयुक्त स्वच्छादर्शे मुखमिव निहित निश्चलेन चेतसा चिर ये पश्यन्ति । हे त्रिनयन ! तेषा मनोवाञ्छितार्थप्रसूतिराविर्भवति । हि यस्मात्कारणात्सुधियामेव धर्म समाधि. ॥ ४७ ॥

ज्ञानज्योति सकलजगता यत्प्रकाशस्वरूप
त्वामात्मान परिहृतगुणस्पर्शमीशानमीळे
यत्रैकस्मिन्नवहित [1] धिया योगदृष्टिस्थिताना
स्वच्छादर्शे प्रतिफलितवद्विश्वमेतद्विभाति ॥ ४८ ॥

**ज्ञानज्योतिः** इति । ज्ञानज्योति ज्ञानरूप ज्योतिर्ज्ञानज्योति । सकलजगता समस्तलोकानाम् । यत्प्रकाशस्वरूप यस्य प्रकाशस्य स्वरूपस्य स्वयंप्रकाशस्य स्वरूप त्वा भवन्तम् । आत्मानम् । परिहृतगुणस्पर्श निर्गुणमित्यर्थ । यद्वा परिहृता गुणा नीलपीतादयः । अनृतजडपरिच्छेददुःखरूपा स्पर्शा शीतोष्णरूपा येन परिहृतगुणस्पर्शे । तं ईशानं जगदीश्वरम् । ईळे स्तुवे । यत्र परमेश्वरे । एकस्मिन्नद्वितीये । अवहितधिया निदिध्यासनाविष्टचित्तानाम् । योगदृष्टिस्थिताना योगदृष्टौ (प्रत्यग्दृष्टौ) प्रत्यक्षदृष्टौ । स्थितानाम् । स्वच्छादर्शे निर्मलमुकुरे । प्रतिफलितवत् प्रतिफलितमिव । विश्व प्रपञ्च । एतद्विभाति । त्वयि प्रतिफलतीत्यर्थ ।

अत्रेत्थ पदयोजना – हे सदाशिव ! यत्प्रकाशस्वरूप सकलजगता ज्ञानज्योति । तत् त्वामात्मान परिहृतगुणस्पर्शमीशानमीळे । एकस्मिन्न्यत्रावहितधिया योगदृष्टिस्थितानामेतद्विश्व स्वच्छादर्शे प्रतिफलितवद्विभाति ।

अयमर्थ – घटादयो विषया स्वरूपेण चैतन्यहीना आत्मावगतिप्रकाशेनापि न संसृज्यन्ते चेन्मया विदिता घटादय इति तादात्म्यसंबन्धावभासो न स्यादिति । अत उक्त—'ज्ञानज्योति' सकलजगता यत्प्रकाशस्वरूपम्' इति । यत्रैकस्मिन्निति 'एक एव रुद्रो न द्वितीयाय तस्थे' इति श्रुत्यर्थ सूचित । तस्यैवोपव्याख्यान परिहृतगुणस्पर्शमिति । तथा च श्रुति – 'एको देव. सर्वभूतेषु गूढ सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्ष सर्वभूताधिवास साक्षी चेता केवलो निर्गुणश्च' ।
इति ॥ ४८ ॥

[1] ग धिया ।

भूत भूतं स्मरणविषय भावि [1] चास्त्यन्तकाले
सूक्ष्म मध्येक्षणमिह तयोर्वर्तमान [2] वलन्ते ।
यस्मिन्सौख्य कियदमतयो येन मत्ता मनुष्या
युष्मत्सेवा भव भवभयध्वसिनीं नाद्रियन्ते ॥ ४९ ॥

**भूतं भूत**मिति । भूत प्राप्तम् । भूतमनुभूतम् । स्मरणविषय स्मृतिगोचरम् । भावि च वर्तिष्यमाण च । अस्ति विद्यते । अन्तकाले देहनिर्याणकाले । सूक्ष्ममत्यल्पम् । मध्येऽन्तराले । क्षण क्षणमात्रम् । सूक्ष्मकालवाचित्वेन नपुंसकलिङ्गता । 'क्षण सूक्ष्मे नपुसकम्' इत्यभिधानात् । इह ससारचक्रे । तयोर्भूतभाविक्षणयोर्वर्तमान क्षण वलन्ते परिलुठन्ति । वलिधातुरुभयपदी । 'चक्षिङ् आख्याते' इत्यत्र ङित्करणात् । अनुदात्तादेवात्मनेपदे सिद्धे पुनर्ङित्करण व्यर्थ सत् वलेरात्मनेपद ज्ञापयति । अतश्च वलन्त इति रूपसिद्धि । यस्मिन् वर्तमानक्षणे । सौख्य सुखम् । कियदत्यल्पमित्यज्ञात्वैवेत्यर्थ । अमतयोऽल्पबुद्धय । अल्पार्थे नञ् । 'अनुदरा कन्या' इतिवत् । येन कारणेन । मत्ता सन्त मदयुक्ता सन्त गर्वान्वा इत्यर्थ मनुष्या. युष्मत्सेवा भवद्धरिवस्याम् । हे भव ! भवभयध्वसिनीं भवात्ससाराद्भय तस्य ध्वसिनी उन्मूलयित्रीं ता नाद्रियन्ते आदर न कुर्वन्ति ।

अत्रेत्थ पदयोजना—स्मरणविषय भूत क्षण भूतं अन्तकाले भावि च क्षण भूत तयोर्भूतभाविनोर्मध्ये वर्तमान सूक्ष्म क्षण भूतमेव । इहास्मिन् क्षणे वलन्ते । यस्मिन् सौख्यं कियदित्यमतयो मनुष्या मत्ता सन्त हे भव ! भवभयध्वसिनी युष्मत्सेवा नाद्रियन्ते ।

अयमर्थ—उत्पत्तिक्षणं स्थितिक्षण विनाशक्षणमिति त्रिक्षणावस्थायि जीवनम् । तत्र मध्यक्षण एवैकस्मिन् अत्यन्तस्पृहयालव एव ससारचक्रे परिभ्रमन्ति सर्वे मनुष्या । भवत्सेवारसज्ञा न भवन्ति । अतश्च सार्वत्रिकी भक्तिर्नास्ति । कि तु निरञ्जनैकनियतेति ।

---

[1] ग चास्त्यत्र काले । [2] ख लभन्ते, ग वदन्ति ।

एतदुक्तं भवति—ससारदशाया भूत क्षणजातम् । तत स्मर्यमाणमेव न तु पु[न]रावृत्तमिति शेष । अत उक्त भूत भूतमिति तत्र स्मर्यमाणे क्षणे विहितार्थानुष्ठान नास्ति । कालस्य गतत्वात् । वर्तिष्यमाण क्षण मुमूर्षावछिन्नमिति तत्रापि विहितानुष्ठान नास्ति परन्तु मध्यवर्तिनि क्षणजाते विहितार्थानुष्ठान शक्यते कर्तुम् । तथापि सति दुर्मेधस कतिचन पुरुषा परमपुरुषार्थसाधन कर्म कर्तुमजानाना पशुपुत्रादिसाधनान्येव कर्माणि कुर्वन्ति पुन ससारचक्रे भ्रमन्तीति निर्वेद ।

अय भाव —शिवभागवता महानुभावा कतिचन निरला मुक्तिभाजोऽर्चिरादिमार्गगामिन । अवशिष्टा सर्वे धूमादिमार्गगामिन पुनर्भवाय कल्पन्त इति ॥ ४९ ॥

ज्ञानं न स्यात्क्वचिदपि किल ज्ञेयसबन्धशून्य
ज्ञेय सत्तामपि न लभते ज्ञानबाह्य कदाचित् ।
इत्यन्योन्यग्रथितमुभयोर्व्यापक यत्स्वरूप
तत्ते प्राहु प्रकृतिपुरुषस्यार्धनारीश्वरत्वम् ॥ ५० ॥

**ज्ञान**मिति । ज्ञानं ज्ञायते विषयो येनेति ज्ञान विज्ञानम् । न स्यान्नास्त्येव । क्वचिदपि कदाचिदपि ज्ञेयविनाभूत ज्ञान कदापि नास्तीत्यर्थ । किलेति सम्भावनायाम् । 'वार्तासम्भाव्ययो किल' इत्यभिधानात् । ज्ञेयसबन्धशून्य ज्ञेयेन विषयेण घटपटादिना सबन्धस्तादाम्यरूपस्तेन शून्यं रहितम् । ज्ञेय घटपटादिक सत्तामपि सद्भावमपि न लभते न प्राप्नोति । ज्ञानबाह्य ज्ञानस्य बाह्य ज्ञानबाह्यम् । ज्ञानविरहितमित्यर्थ । कदाचित् । इति एवप्रकारेण । अन्योन्यग्रथितमन्योन्येन परस्परेण ग्रथितम् । उभयोर्ज्ञानज्ञेययोर्व्यापक व्यापकभावेनैव प्रधानरूपेणैवावस्थितम् । न तु व्याप्यव्यापकभावेन । यत्स्वरूप यत्प्रसिद्ध स्वरूप तत्स्वरूपम् । ते तव । प्राहुर्वदन्ति । प्रकृतिपुरुषस्य प्रकृतिपुरुषयोरित्यर्थ । अर्धनारीश्वरत्वमर्धनारीश्वरभावम् । समासस्तु प्रथमश्लोक एव कथित ।

अत्रेत्थं पदयोजना -हे सदाशिव ! ज्ञेयसबन्धशून्य ज्ञान क्वचिदपि न स्यात् किल । ज्ञेय कदाचिदपि ज्ञानबाह्य सत् सत्ता न लभते । इत्येवप्रकारेण उभयोर्यत्स्वरूपं व्यापक सदन्योन्यग्रथित तत्स्वरूप प्रकृति-पुरुषस्य तेऽर्धनारीश्वरत्व प्राहु । ।

एतदुक्त भवति—ज्ञेय नाम मन परिणामरूपम् । मनोव्यतिरेकेण ज्ञेयाभावात् । ज्ञेयमेव मनः मन एव ज्ञेयमिति मन एव ज्ञानम् । 'अय घट' इति ज्ञाने उत्पन्ने घट प्रतीयते । तदनन्तर 'अय पट' इति प्रतीतौ घटप्रतीत्यभावात् घटो नास्त्येव । तदनन्तर कटप्रतीतावुत्पन्नाया कट प्रतीयते । अय कट इति मनोमय कट प्रतीयते । न तु वास्तव कट मनोव्यतिरेकेण तत्र कटाभावात् ।

यथोक्त वासिष्ठरामायणे—

अय शलाकासदृशा परस्परमसङ्गिन ।
श्लिष्यन्ते केवल भावा मन कल्पनया स्वया ॥ इति ॥

नन्वेवं पटग्रहणसमये घटप्रतिपत्तौ निवृत्तायां सत्या घटोऽपि निवर्तते । अतश्च ज्ञान ज्ञेयाविनाभूतमित्यु[त्ययु]क्तम् । दृष्टिसृष्ट्याश्रयेण भवतु नाम तत् । तत्र घटग्रहणसमये मन कम्ब्वाकारकारित नियमेन परिणमतीति वक्तव्यम् । तन्नियमनिर्वाहक किंचित्स्थायि वस्त्वङ्गीकार्यम् । तच्च स्थायि वस्तु सस्कार-रूपमङ्गीकर्तव्यम् । 'एक सन्धित्सतोऽपरं प्रच्यवते' इति चेत्—

मैवम् । यदि सस्कारोऽङ्गीक्रियते तर्हि दृष्टिमत व्याहन्येत । श्रूयता तर्हि दर्शनरहस्यम् - 'अय घट' इत्यत्र मन परिणाम कम्ब्वाकारेणावतिष्ठति नियमेन । 'अय पट' इत्यत्र आतानवितानात्मनावतिष्ठति नियमेन कथ स नियम इति न चोदनीयम् । भवदभिमताकारेण परिणमनेऽपि बोध्यस्याप्यबोध्यत्वात् [चोद्यस्यापि चोद्यत्वात्] अतश्च येन केनापि रूपेण प्रतिभानमङ्गीकर्तव्यमेव अत्र चोद्यमचोद्यमेवेति जोषमास्यताम् ।

यद्वा स्वप्नप्रपञ्चवत् जाग्रत्प्रपञ्चोऽपि मनोमय एवेति दृष्टिसृष्टिवादिना सिद्धान्त । अतो ज्ञान ज्ञेयाविनाभूतम् । ज्ञेयमपि ज्ञानाविनाभूतम् ।

तयोर्ज्ञानज्ञेययोर्न प्रधानोपसर्जनभाव । ज्ञेयात्मिका पार्वती । ज्ञानात्मक परमेश्वर । एव प्रकृतिपुरुषरूपयोरुमामहेश्वरयोरर्धनारीश्वरत्व प्राहुर्ब्रह्मवादिन इत्यलमतिविस्तरेण ॥ ५० ॥

यत्प्रत्यक्ष न भवति नृणामिन्द्रियाणामशक्ते-
र्यत्सबन्धग्रहण[1] विरहान्नानुमेय कदाचित् ।
शब्दादीनामपि न विषय स्वापरोक्षस्वरूप
ज्ञान ज्योतिर्यदिह परम तत्त्वमध्यात्म[2] मूर्ते । ५१ ॥

**यत्प्रत्यक्ष**मिति । यद्वस्तु प्रत्यक्ष प्रतिगतमक्ष प्रत्यक्षम् । साक्षाद्विषय इत्यर्थ । न भवति । नृणा मनुष्याणाम् । इन्द्रियाणा चक्षुरादीनाम् । अशक्ते सामर्थ्याभावात् । चक्षुरादीनामिन्द्रियाणा घटपटादिपराग्विषयैक-नियतत्वात्प्रत्यगात्मान विषयीकर्तुमशक्तत्वादिति भाव । तथा च श्रुति — 'पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्' इति । स्वयम्भूर्ब्रह्मा । खानीन्द्रियाणि । पराञ्चि पराग्विषयाणि । व्यतृणत् निर्मितवान् । चित्रस्थप्रतिमाचक्षुरादिवत् । तस्माल्लोक पराचो घटपटादीनेव । पश्यति । नान्तरात्मानम् । तस्य प्रत्यग्रूपत्वाच्चक्षुरादीन्द्रियाणा प्रत्यग्विषयत्वा भावाच्चेति श्रुतेरर्थ । अत उक्त —इन्द्रियाणामशक्तेरिति ।

यद्वस्तु सबन्धग्रहणविरहात् सबन्धोऽविनाभावरूप तस्य ग्रहण ज्ञान तस्य विरहोऽभाव· तस्मात् । प्रत्यक्षप्रमाणगोचरत्वाभावेन व्याप्तिग्राहकप्रमाणा-भावाद्व्याप्त्यभावेऽनुमानस्यानुदयात् अनुमानवेद्यतापि दण्डापूपन्यायविरहितेति भाव । अत उक्तम्—नानुमेय इति । अनुमानप्रमाणगोचरो न भव-तीत्यर्थ । कदाचित् । त्रैकाल्यसिद्धमित्यर्थ । शब्दादीना शब्दोप-मानार्थापत्त्यभावानाम् । अपि न विषय गोचरो न भवति । तत्र हेतुमाह—स्वापरोक्षस्वरूपमिति । स्वेन रूप्यत इति स्वरूपम् । यद्वा स्वस्य रूपमपरोक्ष प्रत्यक्षमपरोक्षमेव स्वरूपमपरोक्षस्वरूप स्वेनात्मनैवापरोक्षस्व-रूपम् । स्वयम्प्रकाशम् । घटादिक तु प्रत्यक्षमालोकसहकृतचक्षुर्ग्राह्यम् । तद्वन्न भवत्यात्मा । स्वयप्रकाशस्वरूपत्वात् । स्वयमेव प्रकाशते प्रदीपवत् । शब्दादिक तु प्रमाणजात परोक्षविषयैकनियतम् । अत उक्तम्—शब्दादीना

[1] क विषयात् । [2] क मूर्ति, ग मूर्ति ।

न विषय इति । उपमानस्यापि न विषय । सादृश्याभावात् । अभावस्यापि न विषय , भावरूपत्वात् । अर्थापत्तेरपि न विषय । अनुपपत्त्यभावादिति कवेरभिप्राय . ज्ञान ज्ञानस्वरूपम् । ज्ञानशब्दो भाववचन । अत एव सर्वप्रमाणाना ज्ञेयैकनियतत्वादिति ज्योति । स्वयम्प्रकाशम् । प्रकाशान्तरानपेक्षत्वाद्दीपादिज्योतिर्वत् । पर तु दीपादिक प्रमाणान्तरवेद्य सत् प्रकशान्तरानपेक्षम् । आत्मस्वरूप तु वेदनात्मक सत् प्रकाशान्तरानपेक्षमिति भेद । अत उक्त ज्योतिरिति । यदिह यत्प्रसिद्ध इह । त्व भवान् । अध्यात्ममूर्ते । आत्मनीत्यध्यात्मम् । विभक्त्यर्थेऽव्ययीभाव । अध्यात्म मूर्ति प्रपञ्चो यस्य सः । तस्य सबुद्धि । स्वाध्यस्तसकलप्रपञ्च इत्यर्थ । तमेन प्रपञ्च स्वयमेवेक्षते । अनेनाध्यात्ममूर्तिपदेन भवान् साक्षिचैतन्यमिति व्यज्यते ।

अत्रेत्थ पदयोजना—नृणामिन्द्रियाणामशक्ते प्रत्यक्ष यन्न भवति । सबन्धग्रहणविरहात् कदाचिदपि अनुमेय यन्न भवति । स्वापरोक्षस्वरूप सत् शब्दादीना यन्न विषय. । तत् ज्ञान परम ज्योति । हे अध्यात्ममूर्ते ! त्वमेव ।

अय भाव—ब्रह्मस्वरूप सदाशिवतत्व परागर्थविषयप्रत्यक्षादिगोचरो न भवति । प्रत्यक्चैतन्यरूपत्वात् । अत एव ज्ञान कूटस्थसाक्षिचैतन्य अपरोक्षस्वभाव परोक्षैकनियतानामनुमानादीना न विषय । अपि तु वेदान्तवाक्यजनितसरकारसध्रीचीनान्त करणवृत्तेर्गोचर । तथा च श्रुति—'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एन विदुरमृतास्ते भवन्ति' । 'नावेदविन्मनुते त बृहन्तम्' इत्यादिका । अथवा वेदान्तवाक्यैरेव ज्ञातु शक्यते तत्त्वमसीत्यादिवाक्याना 'दशमस्त्वमसि' इत्यादिवाक्यवदपरोक्षज्ञानजनकत्व लोकसिद्ध । अतश्च शब्दस्य परोक्षज्ञानजनकत्व विषयस्य परोक्ष्यान्न तु शब्दस्वाभाव्यादिति ज्ञायते । ततश्च ब्रह्मस्वरूप सिद्धमपरोक्ष तत्त्वमस्यादिवाक्याना विषय इति तत्त्वमस्यादिवाक्यान्यपरोक्षज्ञानजनकान्येवेति शब्दप्रमाणवेद्यत्व सदाशिवस्य ब्रह्मस्वरूपस्य न विरुध्यत इति कवेर्हृद्गतोऽभिप्राय इत्यलमतिविस्तरेण ॥ ९१ ॥

त्वामात्मानं वरद परमानन्दबोधस्वरूप
ये बुद्ध्यन्ते विगलित[1] जगद्बीजमायाप्रपञ्चम् ।
रागत्यागात्स्तिमितमनसो देव जीवन्त एव
श्यन्मायानिगल[2] निबिडग्रन्थयस्ते विमुक्ता ॥ ५२ ॥

**त्वामात्मान**मिति । त्वां भवन्तम् । आत्मानं प्रत्यगात्मस्वरूपम् । चिन्मात्रमित्यर्थ । हे वरद ! परमानन्दबोधस्वरूप परमश्चासावानन्दश्च परमानन्द स चासौ बोधश्च स चासौ स्वं परमानन्दबोधस्वमेतैर्विशेषणै रूप्यत इति परमानन्दबोधस्वरूपस्तम् । परमशब्देनानन्त्यमुच्यते । अनन्तत्वमपरिच्छिन्नत्वं देशत कालतो वस्तुतश्च । अत्र नास्ति तत्रास्ति । तत्र नास्ति अत्रास्तीति देशत परिच्छेद । तस्मिन्काले नास्ति अस्मिन्कालेऽस्ति । तस्मिन् कालेऽस्ति अस्मिन्काले नास्ति इति कालत परिच्छेद । विभुत्वात्त्रैकाल्यसिद्धत्वाच्च ताभ्यां देशकालाभ्यामपरिच्छेद्यमित्यर्थ । भेदस्यासिद्धेर्वस्तुतश्चापरिछेद्यम् ! देवदत्तादग्निदत्तस्य भिन्नत्वेन प्रतीतौ सत्या देवदत्तादग्निदत्तोऽग्निदत्ताद्देवदत्तश्च स्वरूपत परिच्छिन्न ? आत्मा आनन्दरूप परप्रेमास्पदत्वात् । लोके पुत्रादिकमात्मशेषत्वेनैव प्रेमास्पद न तु पुत्रादिमात्रत्वेन । तथा च श्रुति – 'न वारे पुत्रस्य कामाय पुत्र प्रियो भवत्यात्मनस्तु कामाय पुत्र प्रियो भवति' । 'न वारे जायाया कामाय जाया प्रिया भवति आत्मनस्तु कामाय जाया प्रिया भवति' इत्युपक्रम्य 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति । अतश्चात्मा परमप्रेमास्पदत्वादानन्दरूप इति सिद्धम् । बोधस्वरूपत्वम् [आत्मा बोधरूप] 'घटो भाति' 'पटो भाति' इत्यादौ घटपटाद्यननुवृत्तौ भानानुवृत्तेरात्मनो भानरूपता । स्वं सत्तारूपम् । 'घटोऽस्ति' 'पटोऽस्ति' इत्यादौ घटपटादिनिवृत्तौ सन्मात्रस्यानुवृत्ते सदात्मता ब्रह्मण इति । ये विद्वास बुध्यन्ते विदन्ति । विगलितजगद्भेदमायाप्रपञ्चम् । विगलितो नष्ट । अविद्यमान इत्यर्थ । जगद्रूपेणात्मनो भेद । स एव माया तस्या प्रपञ्च विक्षेपप्रकारबाहुल्य यस्मात् । स । तम् । रागत्यागात् वैराग्यात् । स्तिमितमनस स्तब्धान्त करणा । जीवन्मुक्तानामन्त करणं कार्यकारि न भवति । तत्पुरस्ताद्वक्ष्यते । हे देव ! प्रपञ्चेन क्रीडनशील ।

---

[1] अ क ख ग घ जगद्भेद । [2] ख निश्चित ।

जीवन्त एव मृतप्राणा एव । भ्रश्यन्मायानिगलनिबिडग्रन्थय भ्रश्यन्त न भ्रष्टा अपि तु भ्रश्यन्त एवेत्यनेनाविद्यालेशवत्त्व निर्दिश्यते । माया-कृतो निगल संसारबन्ध । तस्य निबिडा ग्रन्थय॰ मायाविक्षेपा येभ्यस्ते । तथा च श्रुति —'भिद्यते हृदयग्रन्थि छिद्यन्ते सर्वसशया । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' । इति । परेण ब्रह्मणा अवरो जीवात्मा एकीकृत परावर इति । ते विद्वास । विमुक्ता ससार-रहिता॰ ।

अत्रेत्थ पदयोजना—हे वरद ! ये विद्वास त्वा विगलितजगद्भेद-मायाप्रपञ्च परमानन्दबोधस्वरूप आत्मानमिति बुद्धयन्ते ते रागत्यागात् स्तिमितमनसो जीवन्त एव भ्रश्यन्मायानिगलनिबिडग्रन्थय सन्तो विमुक्ता ।

एतदुक्त भवति– जीवन्तो विमुक्ता इति न विरुध्यते । जीवन्मुक्ता नाम जीवात्मपरमात्मनोरैक्यज्ञानवत्तो गलिताविद्या न तु निरवशेष प्रध्व-स्ताविद्या । जीवद्दशाया देहधारणस्य विद्यमानत्वात् । अतश्च जीवन्मुक्ता अविद्यालेशवन्तो मुक्ता इव मुक्ता न तु परमार्थतो मुक्ता । दग्धरशना-न्यायेन देहबन्ध कञ्चित्काल स्थित्वा स्वयमेव विनश्यति ।

यद्वा ज्ञानपरम्परया विनश्यति । न च वाच्य ज्ञानेनाविद्यानाश ज्ञानपरम्परयाविद्यालेशनाश इति हेत्वन्तरस्वीकार इति । अत्रावतिष्ठते सङ्क्षिप्तशारीरकोक्तम्—

जीवन्मुक्तिस्तावदस्ति प्रतीते-
द्वैतच्छाया तत्र चास्ति प्रतीते ।
द्वैतच्छायारक्षणायास्ति लेश-
स्तस्मिन्नर्थे स्वानुभूति प्रमाणम् ॥
तस्याभीष्टा निर्निमित्ता निवृत्ति-
र्यद्वा विद्यासन्ततेर्लेशनाश॰ ॥ इति ॥

अय भाव —बीजकूटप्रारब्धरूपेण कर्माणि त्रिविधानि । बीजकर्माणि महाप्रलयानन्तर पुन सृष्टौ उत्पादकत्वेनावस्थितानि । यथा व्रीह्यादीनि कुसूलादाववस्थितानि अङ्कुरोत्पादक्षमाणि बीजानीत्युच्यन्ते । कूटानि क्षेत्रे उप्तानि । प्रारब्धान्यङ्कुरात्मना परिणतानि । केचित्कुसूलादाववस्थितानि

व्रीह्यादीनि कूटानीत्याहु । देहप्रारम्भकाणि कर्माणि कूटसज्ञावन्ति बीजसज्ञावन्ति वा । देहात्मना परिणतानि प्रारब्धसज्ञकानि कर्माणि । त्रयाणा कर्मणा मध्ये ब्रह्मज्ञानेन बीजकूटयो कर्मणोरत्यन्तनिवृत्ति । प्रारब्धकर्मणा तु ज्ञानाग्निना दग्धत्वम् । दग्धानि दग्धरशनावत्प्रतिभान्ति । सैव बाधितानुवृत्तिरित्युच्यते इत्यलमतिविस्तरेण ॥ ५२ ॥

[1] श्लाघ्य यत्तत्कृपणमनसा [2] सप्तलोकाधिपत्य
या मृग्यन्ते तरलमतिभि सिद्धयश्चाणिमाद्या. ।
एतत्सर्व मदनदहन ! त्वत्पदप्राप्तिभाजा
तत्त्वज्ञानामृतरस [3]जुषा योगिनामन्तराय: ॥ ५३ ॥

**श्लाघ्य**मिति । श्लाघ्य श्लाघनीयम् । यत्तत् यदित्यर्थ । कृपण मनसा दीनचित्ताना कामिनामित्यर्थ । सप्तलोकाधिपत्य सप्तलोकानामाधिपत्यमैश्वर्यम् । या प्रसिद्धा । मृग्यन्तेऽन्विष्यन्ते । तरलमतिभिश्चञ्चलचित्तै । सिद्धयश्चाणिमाद्या अणिमप्रभृतय । आदिशब्देन महिमगरिमलघिमप्राप्तिप्राकाम्येशित्ववशित्वान्युच्यन्ते अणिमा नाम परमाण्वन्तरव्यापित्वमणोरणुतरत्वमेका सिद्धि । महिमा नाम आकाशादिमहद्वस्तुगर्भीकारेण वर्तनम् । महतो महत्व नामैका सिद्धि । गरिमा नाम गुरुद्रव्यस्य पृथिव्या अधिकतरगुरुत्वम् । पृथिवीभञ्जनक्षमत्व नामैका सिद्धि । लघिमा नाम लघोर्लघुतरत्वम् । सूर्यकिरणानादाय सूर्यलोकप्रवेश । चन्द्रकिरणानादाय चन्द्रलोकप्रवेश । नाक्षत्रकिरणानादाय नक्षत्रलोकप्रवेश । लघुद्रव्यावलम्बित्व नामैका सिद्धि । प्राप्तिर्नाम अप्राप्यवस्तुप्रवेश: शिलादौ कठिनद्रव्ये प्रविश्य भित्वा गमन यतस्य । काचादाविव । प्राकाम्य नाम कामरूपतैका सिद्धि । ईशित्वमैश्वर्यम् । वश्यविद्यत्व नामैका सिद्धि । वशित्व जितेन्द्रियत्व नामैका सिद्धि । एवमष्ट सिद्धय । एतत्सर्व हे मदनदहन ! जितकाम ! त्वत्पदप्राप्तिभाजा कैलासनिवासिना त्वत्पदाम्भोजसेविना वा । तत्त्वज्ञानामृतरसजुषा तत्त्वज्ञानमेवामृत तस्य रसजुषा रसास्वादवता योगिना सयमिना मन्तरायो विघ्न ।

---

[1] अथ ग पुस्तके ५८ श्लोक, ग श्लाघ्य जन्तो, कृपणमनस ।
[2] ग, सर्वलोका । [3] ग भुजा ।

अन्वेत्थ पदयोजना—हे मदनदहन ! कृपणमनसा सप्तलोकाधिपत्य यत्तत् श्लाघ्य तरुणतिमिरणिमाद्या सिद्धयश्च या मृग्यन्ते एतत्सर्व तत्त्वज्ञानामृतरसजुषा त्वत्पदप्राप्तिभाजा योगिनामन्तराय *।

एतदुक्त भवति—सदाशिवभक्ताना प्रमथानामणिमादिसिद्धयः स्वयमेवोपनता सत्य तेषा द्वारि वर्तन्ते । ताश्च सिद्धयस्तपोविघ्नकारिण्य इति प्रमथाना हृदये 'किमर्थमेता सिद्धयो मद्द्वारि वर्तन्त' इति तासु बहुमानबुद्धिर्नास्तीति तात्पर्यम् ।

तदुक्तम्—

भिन्दन्ति शैलानुदधीन् पिबन्ति
  व्यत्यासयन्ति क्षितिमन्तरिक्षम् ।
तृणीकृतब्रह्मपुरन्दराणा
  कि दुष्कर शङ्करकिङ्कराणाम् ॥ इति ॥ ५३ ॥

[1]आशा वास शयन[2]मवनी ब्रह्मचर्य च दीर्घं
  मौन दण्डग्रहणमशन भिक्षया भस्म शौचम् ।
वैराग्य च त्रिनयन भवत्तत्त्वबोधाद्विहीन
  मूलादेव ह्युलपलवन सर्वमेतद्विभाति ॥ ५४ ॥

**आशा वास** इति । आशा वास दिगम्बरत्वमित्यर्थ । शयन शयनस्थानम् । अवनी भूमिः । ब्रह्मचर्यं च दीर्घम् । नैष्ठिकब्रह्मचर्यमित्यर्थ ।

"नैष्ठिकब्रह्मचारी तु तिष्ठेदाचार्यसन्निधौ ।
वैश्वानरे वा तत्पत्न्या दान्त आमरणान्तिकम्" ॥ इति ॥

मौन सत्यवादित्वम् । यद्वा काष्ठमौनम् । दण्डग्रहणमेकदण्डधारणं वा त्रिदण्डधारण वा । अशनमुदरपूरणम् । भिक्षया भिक्षान्नेन । भिक्षा नाम प्रसृति तत्पूरितान्नेनेत्यर्थ । भस्म भसितम् । शौच शौचहेतु । उदकेनेव भस्मना शौचादिकर्म योगिनामित्यर्थ । वैराग्य च, चकार इत्थमर्थे । इत्थप्रकार वैराग्यम् । हे त्रिनयन ! भवत्तत्वबोधात् भवतस्तत्व निजस्वरूपम् । तस्य बोधात् । विहीनं परित्यक्तम् । मूलात् ल्यब्लोपे

---

[1] अय ग पुस्तके ६१ लोक ।    [2] ग घ मवनिर्ब्रह्म ।

पञ्चमी । मूलप्रवेशमवलम्ब्येत्यर्थ । एव च एवसतीत्यर्थ । उलपलवन. उलपस्तृणविशेष शाल्यादिसत्वमध्यवर्ती तस्य लवन छेदनम् । फलित शाल्यादिसस्य विहायेति शेष ।

तथोक्त वायवीयसंहिताया—

'आत्मस्थ य शिव त्यक्त्वा बहिरभ्यर्चयेन्नर ।
हस्तस्थ फलमुत्सृज्य लिहेत्कूर्परमात्मन ' ॥ इति ॥

तद्वन्निष्फलमित्यर्थ । सर्व कृत्स्नं दिगम्बरत्वादिकम् । एतत् विभाति प्रतिभाति ।

अत्रेत्थ पदयोजना—आशावास अवनिशयनं दीर्घ ब्रह्मचर्य च मौन दण्डग्रहण भिक्षया अशन शौचं भस्म च इत्थ वैराग्यं हे त्रिनयन ' भवत्तत्वबोधाद्विहीनं चेदेव सति एतत्सर्व मूलादुलपलवनं विभाति ।

एतदुक्त भवति—दिगम्बरत्वभूशयनादयो विरक्तधर्मा । विरक्तस्य शिवोऽहमिति भावनापूर्वकमेव तद्धर्मानुष्ठान कर्तव्यम् । न सेव्यसेवकभावज्ञान-पूर्वकमिति । तदुक्तं वायवीयसहिताया उपरि एकोनविंशाध्याये —

"नाशिव शिवमभ्यस्यन्नाशिव शिवमर्चयेत् ।
नाशिवस्तु शिवं ध्यायेन्नाशिव शिवमाप्नुयात् ॥

तस्माच्छैवी तनु कृत्वा त्यक्त्वा च पशुभावनाम् ।
शिवोऽहमिति सञ्चिन्त्य शैव कर्म समाचरेत्" ॥ इति ॥ ९४ ॥

[1] स्थित्वा काल चिरतरमपि ब्रह्मशक्रादिलोके
[2] कर्मच्छेदात्पुनरपि ततः स्यादवश्य निपात ।
एक नित्य पद[3] मुपनत क्लेशकर्मोर्मिदूर
शैव योगात्परमसुलभ ज्ञानयोगेन पुसाम् ॥ ९५ ॥

**स्थित्वा काल**मिति । स्थित्वा उषित्वा । काल चिरतरमपि अनेककाल कर्मानुरूपमित्यर्थ । ब्रह्मशक्रादिलोके आदिशब्देनाग्न्यादिलोकेषु । कर्म-

---

[1] ग पुस्तके ५२ श्लोक । [2] क कर्मोच्छेदात् ।
[3] ग मपगतक्लेश ।

च्छेदात् कर्मक्षयात् । अग्निष्टोमादिकर्मजनितस्वर्गादिफलप्रापकापूर्वक्षयादित्यर्थ । पुनरपि पुनर्भवार्थम् । स्यादवश्य निपातो गर्भगोल इति यावत् । एक-मद्वितीय । नित्यमनश्वर पुनरावृत्तिरहितमित्यर्थ । पद स्थानम् । उपनत सुखलभ्यम् ज्ञानमात्रलभ्यत्वात् । क्लेशकर्मोर्मिदूर क्लेशकर्मविपाकाशया क्लेशशब्देनोच्यन्ते । तान्येवोर्मयस्तरङ्गा तेषा दूर तैरस्पृष्टमित्यर्थ । शैव शिवसम्बन्धि सदाशिवतत्त्वमित्यर्थ । योगात् कर्मयोगात्, पञ्चमहायज्ञादिति यावत् । शिवसायुज्य सुलभमिति यावत् । परमसुलभ परममत्यन्त सुखेन लब्धु शक्य परमसुलभम् ज्ञानयोगेन पुराम् ।

अत्रेत्थ पदयोजना—ब्रह्मशक्रादिलोके चिरतर काल स्थित्वापि कर्मच्छेदात् तत कर्मिणा पुनर्भवायावश्य निपात स्यादेव । एक नित्य क्लेश कर्मोर्मिदूरमुपनत शैव पद कर्मयोगात् ज्ञानयोगेन पुसा परमसुलभम् ।

अयमर्थ—कर्मण क्लेशात्मकात् क्लेशसाध्यात फलादक्लेशात्मकज्ञानसाध्य मेव फलति । तदुक्त वायवीयसहितायामुत्तरभागेऽष्टादशाध्याये—

"कर्मयज्ञस्तपोयज्ञो जपयज्ञस्तदुत्तर ।
ध्यानयज्ञो ज्ञानयज्ञ पञ्चयज्ञा प्रकीर्तिता ॥

कर्मयज्ञरता केचित् तपोयज्ञरता परे ।
जपयज्ञरताश्चान्ये ध्यानयज्ञरतास्तथा ॥

ज्ञानयज्ञरताश्चान्ये विशिष्टाश्चोत्तरोत्तरम् ।
कर्मयज्ञो द्विधा प्रोक्त कामाकामप्रभेदत ॥

कामान् कामी ततो भुक्त्वा कामासक्त पुनर्भवेत् ।
अकामी रुद्रभवने भोगान् भुक्त्वा ततश्च्युत ॥

रतो यज्ञरतो भूत्वा जायते नात्र सशय ।
तपस्वी च पुनस्तस्मिन् भोगान् भुक्त्वा ततश्च्युतः ॥

जपध्यानरतो भूत्वा जायते भुवि मानव ।
जपध्यानरतो मर्त्यस्तद्वैशिष्ट्यवशादिह ॥

ज्ञान लब्ध्वाचिरादेव शिवसायुज्यमाप्नुयात् ।
तस्मान्मुक्तौ क्रमाद्धेतु कर्मयज्ञादि देहिनाम् ॥" इति ॥ ९९ ॥

शक्रादीना क्रतुफलजुषा यत्सुख नाकलोके
तत्कीटादेर्नरकनिलयस्यापि तुल्य विभाति ।
येनैकान्त न भवति सुख कस्यचि[1]न्नापि दु खं
[2]द्वन्द्वग्रस्त त्रिभुवनमिद त्वं तु तस्माद्विमुक्त ॥ ५६ ॥

**शक्रादीना**मिति । शक्रादीनामिन्द्रादीनाम् । क्रतुफलजुषा नराणा यत्सुखमस्ति नाकलोके स्वर्गे तत्सुखम् । कीटादे क्षुद्रजन्तुप्रभृतीनाम् । नरकनिलयस्यापि नरको नरकलोक स च निलयो यस्य स तस्यापि । अपिशब्दस्तुल्यताद्योतनार्थ । तुल्यं सत् विभाति । येन कारणेन । एकान्त नियत न भवति सुखम् । कस्यचित्पुरुषस्य । नापि दु ख दु खमपि नास्ति । एकान्त दु.ख सुखमपि वा किञ्चिन्नास्तीत्यर्थ । द्वंद्वग्रस्त सुखदु खयुगलेन ग्रस्तमावृतम् । त्रिभुवन त्रिलोकी । इद परिदृश्यमानम् । त्वं तु भवास्तु तस्माद्विमुक्तो द्वन्द्वातीत ।

अत्रेत्थ पदयोजना—हे सदाशिव ! क्रतुफलजुषा शक्रादीनां मध्ये नाकलोके यत्सुखमस्ति तन्नरकनिलयस्यापि कीटादेस्तुल्य सद्विभाति । येन कारणेन कस्यचित्पुरुषस्य एकान्त सुख वा न दु ख वा भवति द्वन्द्वेन कारणेन । इद त्रिभुवन द्वन्द्वग्रस्त, त्व तु तस्माद्विमुक्त ।

एतदुक्त भवति लोके न कोऽपि पुरुषस्सर्वथा सुखीति व्यपदेष्टुं शक्यते । वृश्चिकदशनादिदु खदर्शनात् आकस्मिकदु खदर्शनाच्च । चूतफलभक्षणस्त्रीसम्भोगादावुत्पन्नमपि सुख दु खमिश्रमेव, परिणामे दु खानुभवात् । अत केवलं सुख दु खासमिन्न संसारदशाया कुत्रापि नास्ति अतश्च नरकनिवासिना केवल दु ख स्वर्गनिवासिना च सुख दु खमिश्रमितीयान् भेद । अथ वा ग्रामसूकराणा कर्दमादिक्रीडन लौकिकदृष्ट्या दु ख तेषा सूकराणा सुखमिति प्रतीयते । एव विपश्चिता तु स्वर्गादिसुख नश्वरत्वात स्वर्गस्वाराज्यादीना सुखाना तारतम्यनिबन्धनत्वात् । (तेऽपि) राज्यसुखमनुभवता प्रागल्भ्यं

[1] घ न्नास्ति ।
[2] क द्वद्वे ।

दृष्ट्वा स्वर्गमनुभवता दुःखमेव निरतिशयसुखापेक्षया सातिशयाना सुखाना दुःखरूपतैवेति । अतः स्वर्गवासिना नरकनिवासिना च तुल्यतैवेत्युक्तं कविनेत्यनुसन्धेयम् ॥ ५६ ॥

बन्धच्छेदादिह तनुभृता यत्त्वया साकमैक्य
सा चेन्मुक्तिः शिव किमनयायातु [1] यद्वान्धकूप ।
त्व मे स्वामी भवदनुचरः शर्व यत्सर्वदाह
तद्धि श्लाघ्य [2] स्वपतिपदवी कामयन्ते न भृत्या ॥ ५७ ॥

**बन्धच्छेदादिति** । बन्धच्छेदात् बन्धस्य ससारस्य च्छेदादपायात् । इह देहे । यद्वा त्वद्भावनाया सत्याम् । तनुभृता शरीरिणाम् । यत् त्वया साक साधम् । ऐक्य सायुज्यमित्यर्थ । सा चेन्मुक्ति । असशये सशयोक्ति । यदि वेदा प्रमाणमितिवत् । सैव मुक्तिरित्यर्थ. । हे शिव ! मङ्गलस्वरूप ! किमनया मुक्त्या । एषा मुक्तिरस्माभिर्नाद्रियत इत्यर्थ । आयातु नाम आगच्छतु नाम । यद्वा पक्षान्तरे । अन्धकूपो जीर्णकूप । दुर्गतिरिति यावत् । तत्र हेतुमाह - त्व भवान् । मे स्वामी ईश्वर । भवदनुचर भवतोऽनुचरस्सेवक । हे शर्व ! सर्वदा त्रैकाल्ये । अह तत् । हि प्रसिद्धौ । उक्तमर्थमर्थान्तरेण समर्थयति श्लाघ्यं श्लाघनीयम् । स्वपतिपदवी स्वस्य पति प्रभु, तस्य पदवी (स्वस्थान) कामयन्ते प्रार्थयन्ते न भृत्या सेवका ।

अत्रेत्थ पदयोजना—हे शिव ! बन्धच्छेदात् इह तनुभृता त्वया साक यदैक्यं सा मुक्तिश्चेदनया किम् ? यद्वा अन्धकूप आयातु नाम । हे सर्व ! यद्यस्मात् कारणात् त्व मे स्वामी, अह भवदनुचरस्तदेव श्लाघ्यम् । तथा हि भृत्याः स्वपतिपदवी न कामयन्ते हि ॥ ५७

वातोध्दूतस्फुटकमलिनीपत्रतोयोपमाने
को विश्वास व्रजति चपले जन्मिनो जीवितेऽस्मिन् ।
[3] कान्तस्त्रीणा प्रियसहचरैर्निर्भरालिङ्गितं मे
चेत शम्भो स्वमिति न यथा [4] त्वत्प्रसाद कुरुष्व ॥ ५८ ॥

---

[1] यद्वान्धुकूपम् । [2] ग नृपति ।
[3] क ख शान्त । [4] क तत्प्रसाद ।

**वातोद्धूते**ति । वातोद्धूतस्फुटकमलिनीपत्रतोयोपमाने, वातेन वायुना उद्धूत स्फुटकमलिन्या पत्रे यत्तोय तदुपमान यस्य तस्मिन् । को जन विश्वास श्रद्धां व्रजति प्राप्नोति, न कोऽपीत्यर्थ । चपले चञ्चले । जन्मिन जन्मवतः । व्रीह्यादि॰ादिनिप्रत्यय । जीविते जीवने । अस्मिन् देहे । कान्तस्त्रीणा कान्तानाम् । प्रियसहचरै प्रियाश्च ते सहचराश्च प्रियसहचरा चक्षुरादीन्द्रियाणि तैस्सह । निर्भरालिङ्गित निर्भर यथा भवति तथा आलिङ्गि-तम् । मे चेत चित्तम् । हे शम्भो । स्वपिति निद्रामुद्याति परवशमित्यर्थ । न यथा त्वत्प्रसाद कुरुष्व तव प्रसाद कुरुष्व विधेहि

अत्रेत्थ पद्ययोजना—हे शम्भो । वातोद्धूतस्फुटकमलिनीपत्रतोयोपमाने चञ्चले जन्मिनोऽस्मिन् जीविते को विश्वास व्रजति । कान्तस्त्रीणा प्रियसह-चरैर्निर्भरालिङ्गित सत् मे चेतो यथा न स्वपिति तथा त्वत्प्रसाद कुरुष्व ॥ ५८ ॥

त्वन्नेत्राग्निव्यतिकरमय प्राक्तने पुष्पचाप
स्मृत्वा नून व्यवसितमतिर्वैरनिर्यातनाय ।
यत्ससक्त तव चरणयोर्देव सेवानुरागा-
त्तन्मे चेत प्रहरति शरैस्त्र्यक्ष तद्रक्ष यत्नात् ॥ ५९ ॥

**त्वन्नेत्राग्निव्यतिकर** इति । त्वन्नेत्राग्निव्यतिकरं भवन्नयनानलव्यतिकर सम्बन्धो यस्य तदिति षष्ठीव्यधिकरणबहुव्रीहि । स च 'न धातुलोप आर्धधातुके' इत्यनेन ज्ञापित । अय काम । प्राक्तन पूर्वधृतम् । पुष्पचाप कुसुमकोदण्डम् । चापशब्दो नपुसकलिङ्गेऽपि वर्तते । 'अथास्त्रिया धनुश्चापो' इत्यभिधानात् । स्मृत्वा अभिज्ञाय । नून व्यवसिता निश्चिता मतिर्येन स व्यवसितमति । ईश्वरस्त्वसाध्य तद्भक्त एव वैरनिर्यातन करिष्यामीति व्यवसाय इत्यर्थ । वैरनिर्यातनाय वैरस्य निर्यातनं यापन तस्मै । यद्यस्मात् कारणात् । ससक्त सम्बद्ध । तव चरणयो भवत्पादाम्बुजयो । हे देव । सेवानु-रागात् सेवायामनुरागस्तस्मात् । मे चेत मम हृदयम् । प्रहरति हन्ति । शरै बाणै । त्र्यक्ष । साभिप्रायविशेषणमतत् । मन्मथात् तदित्यव्ययम् । रक्ष पालय । यत्नादतिप्रयत्नात् ।

अत्रेत्थ पदयोजना—हे देव ! अयं मन्मथ त्वन्नेत्राग्निव्यतिकरं प्राक्तन पुष्पचाप स्मृत्वा वैरनिर्यातनाय व्यवसितमतिरभूत् । नून यद्यस्मात् कारणात् सेवानुरागात्तव चरणयो ससक्त मे चेत शरै. पुष्पबाणै प्रहरति । तत्तस्मात् कारणात् हे त्र्यक्ष ! तत्तस्मान्म मथात् यत्नान्मा रक्ष ।

अत्र प्रत्यनीकालङ्कार. । इतरप्रतीकाराशक्तौ तदीयप्रतीकार· प्रत्यनीकम् ॥ ५९ ॥

भिक्षापात्र मृगजमजिन जीर्णकौपीनमेक
कन्था रथ्यानिपतितजरज्जीर्णलेशैश्च लघ्वी ।
एतावान्मे हर परिकरस्त्वत्प्रसादेन नित्यं
भूयाद्भूयस्तव चरणयोर्भूयसी भक्तिरेका ॥ ६० ॥

**भिक्षपात्र**मिति । भिक्षापात्र स्पष्टम् ।मृगजमजिन जीर्णकौपीनमेक कन्था स्पष्टमेतत् । रथ्यानिपतितजरज्जीर्णलेशै , रथ्याया निपतिता जरन्त पुराणानि जीर्णाः शिथिला ते च ते लेशा तन्तुलेशा अशव ते । चकार समुच्चयार्थ· । लघ्वी अल्पमूल्या । एतावान् इयान् । मे मम । हे हर ! परिकर. ससारोपकरणम् । त्वत्प्रसादेन । नित्य सर्वदा । भूयो [भूयात्] भूय: जन्मान्तरेऽपि । तव चरणयोर्भूयसी बंहीयसी । 'बहोर्लोपो भू च बहो ' इति भूरादेश ईयसुन् प्रत्यय । भक्ति एका मुख्या । भक्तौ प्रधानभूताया विद्यमानाया सत्यामल्पीयसीभि भिक्षापात्रकन्थादिभि कि प्रयोजनमित्यर्थ ।

अत्रेत्थ पदयोजना—मृगजमजिनमेक जीर्णकौपीन रथ्यानिपतितजरज्जीर्णलेशैर्लघ्वी कन्था च हे हर ! एतावान्मे परिकरस्त्वत्प्रसादेन नित्य भूयात् । हे हर ! तव चरणयोरेका भूयसी भक्तिर्भूयो भूयो भूयात् ॥ ६० ॥

देवस्तद्वद्भवति भगवन् [1] भर्गसर्गस्य सारं
तस्मात्पूर्वं महदिति पद प्रोक्तमुत्कर्षमाह ।
माहात्म्य ते स्मरहर महादेवनाम्नैव लोके
दूरारूढ वरद किमह स्तोत्रमन्यत्करोमि ॥ ६१ ॥

---

[1] घ गर्भसर्गस्य ।

**देव** इति । देवो देव इति शब्दः । तद्वत्तच्छब्दवत् । भवति त्वयि । यथा त्वयि तच्छब्दो वाचक, एव देव देवशब्दोऽपि त्वद्वाचक इत्यर्थ । हे भगवन् । भर्ग ससारबीजश्लोषक ! सर्गस्य ससारस्य । सार सर्वोत्कृष्ट-मित्यर्थ । तस्माद्देवशब्दात् । पूर्वमादौ । महदिति पद प्रोक्तमुच्चरितं सत् सर्वोत्कर्षमाह ब्रूते । 'ब्रुव पञ्चानामादित आहो ब्रुव' इत्याहादेश. । माहात्म्यं महिमानम् । ते तव । स्मरहर ! महादेवनाम्ना महादेव इति नाम्ना । एवेत्यवधारणे । लोके प्रपञ्चे । दूरारूढं दूरमारूढ सर्वेषामुपरि वर्तत इत्यर्थ । हे वरद ! किमह स्तोत्रमन्यत् करोमि महादेवपदमेव भवन्माहात्म्य प्रस्तौति नास्माकं गिरामवकाश इति भाव. ।

अत्रेत्थ पदयोजना—हे भगवन् ! भर्ग ! सर्गस्य सारं त्वयि देवशब्दः तद्वद्वर्तते । तस्माद्देवशब्दात्पूर्व प्रोक्त महदिति पद सारमुत्कर्षमाह ! अतो हे स्मरहर ! ते माहात्म्य लोके महादेवनाम्नैव दूरारूढम् । हे वरद ! कि स्तोत्रमन्यत् करोमि ॥ ६१ ॥

यत्र क्वचिद्भवतु देवमनुष्यातिर्य-
[1]ग्योनौ स्वकर्मपरिपाकवशात्प्रसूति ।
तत्र स्थितस्य मम बालमृगाङ्कमौले
त्वत्पादभक्तिरचलास्तु भवत्प्रसादात् ॥ ६२ ॥

**यत्रे**ति । यत्र क्वचिद्यस्मिन् देशे यस्मिन् काल इत्यर्थ । भवतु प्राप्नोतु । देवमनुष्यतिर्यग्योनौ देवयोनौ मनुष्ययोनौ तिर्यग्योनौ यत्र क्वचिदित्यन्वय । स्वकर्मपरिपाकवशात स्वकर्मण स्वानुष्ठितस्य धर्माधर्महेतुभूतस्य परिपाकवशात फलोन्मुखत्वावस्थावशात् । प्रसूतिरुत्पत्ति । तत्र स्थितस्य, तत्र देवमनुष्यतिर्यग्योनौ स्थितस्योत्पन्नस्येत्यर्थ । मम हे बालमृगाङ्कमौले ! चन्द्रकलावतंस ! त्वत्पादभक्तिरचलास्तु । भवत्प्रसादात् भवदनुग्रहवशादिति ।

अत्रेत्थ पदयोजना—हे बालमृगाङ्कमौले ! स्वकर्मपरिपाकवशात् देवमनुष्यतिर्यग्योनौ प्रसूतिर्यत्र क्वचिद्भवतु । तत्र स्थितस्य मम त्वत्प्रसादात त्वत्पादपद्मभक्तिरचलास्तु ।

---

[1] ग ग्योन्या ।

अय भाव —शिवभागवतस्य परममाहेश्वरस्य देवमनुष्यतिर्यगादेर्योनौ प्रसूतिरेव नास्ति, प्रमथाना लीलापरिगृहीतविग्रहवत्त्वात् । अतश्च क्षुद्रादियोनावपि सम्भवोऽस्त्विति प्रार्थनया शिवप्रसादद्वारा प्रमथत्वमेव प्रार्थ्यत इति कवेरभिप्राय ॥ १२ ॥

[1]तव चरणसरोजे दत्तमेक प्रसून
फलति जलधिवेलावेष्टिता भूतधात्रीम् ।
प्रतिदिवससपर्या भक्तकौतूहलाना
फलमिदमिति शम्भो शक्यते केन वक्तुम् ॥ १३ ॥

**तवे**ति । तव चरणसरोजे भवच्चरणाम्बुजे । दत्त समर्पितम् । प्रसूनं करवीरादिकम् । फलति जलधिवेलावेष्टिता जलधिना वेलया च वेष्टिताम् । भूतधात्री वसुन्धराम् । प्रतिदिवससपर्याभक्तकौतूहलाना प्रतिदिवससपर्याया भक्ताना कौतूहलानि तेषाम् । फलमिदमिति एतावदिति । हे शम्भो ! शक्यते केन पुरुषेण वक्तु, न केनापीत्यर्थः ।

अत्रेत्थ पदयोजना हे शम्भो ! तव चरणसरोजे दत्तमेक प्रसून जलधिवेलावेष्टिता भूतधात्री फलति । प्रतिदिवससपर्याभक्तकौतूहलानामिद फलं [इति] केन वक्तु शक्यते ।

एतदुक्त भवति—शिवपूजाया शिवस्य पादारविन्दयोर्यत्समर्पितमेकमपि करवीरादिक पुष्पं समुद्रवलयितां भूमण्डली फलति । कि पुन प्रतिदिवससमर्पितान्यनेकानि पुष्पाणि कि वा फलन्तीति निर्वक्तु शक्यत इति । अनेन कैमुतिकन्यायप्रतिपादनादर्थापत्त्यलङ्कार । पुष्पोत्पादन स्वजातीयविषयमेव । इद तु शिवसमर्पित पुष्प विजातीय फल भूमण्डलीरूप प्रसूत इति विरुद्धकार्योत्पत्तिर्विषमालङ्कार । अनयोरङ्गाङ्गिभावेन सङ्कर ॥ १३ ॥

कालेन नीतस्सर्वोऽपि पुनरावर्तते जन ।
महाकालेन नीतस्य नावृत्तिर्विद्यते पुन ॥ १४ ॥

---

[1] अय श्लोक ग पुस्तके नास्ति ।          क घ भक्ति ।

**कालेने**ति कालेन यमेन नीत यमपुर प्रापित सर्वोऽपि जन पुनरावर्तते भूलोक प्रति पुनरावर्तते जन्म प्राप्नोतीत्यर्थ । जनो महाकालेन महाकालाख्येनोज्जयिनीनगराधिपतिना सदाशिवेन नीतस्य कैलासनग प्रापितस्य नावृत्तिर्विद्यते पुन । पुनरावृत्तिन भवति । अद्भुतमेतत् ॥ ६४ ॥

[1]अप्येकाक्षरजल्पितैरपि शिशो प्रीतिर्गुरूणा भवे-
त्तस्मान्मद्वचन मलीमसमपि स्यात्तुष्टिहेतुस्तव ।
[2]श्रान्तस्त्वद्गुणकीर्तनात् किमपि यत्पुण्य मयोपार्जित
तेन स्याद्भवनान्तरेऽपि गिरिश त्वय्येव भक्तिर्मम ॥ ६५ ॥

**अप्येकाक्षरजल्पितैरिति** । अपि चेति कथनान्तरे । एकाक्षरजल्पितैरपि । अपभ्रशोक्तिभिरित्यर्थ । यथा विष्णुरिति वक्तव्ये बालो विण्णुरित्याह । विण्णुशब्दस्तु विष्णुशब्दादन्योऽपभ्रश एव । तथापि पित्रो प्रीतिकरो दृष्ट इत्यर्थ । शिशोर्बालस्य । प्रीति सन्तोष । गुरूणा मातापित्रादीनाम् । भवेत् तस्माद्धेतो । मद्वचन मम शिशोर्वचनम् । मलीमसमपि बालिशप्रायमपि स्यात्तुष्टिहेतु तुष्टिकारणम् । तव पितृभूतस्य ।

---

[1]अय ग पुस्तके ६३ श्लोक , ग अव्यक्ताक्षर ।
[2]इदमर्ध ग पुस्तके नास्ति ।

[1]अ ग

महाकालेन सेव्यन्ता ममोदेन विरक्तया ।
ससारोद्धृतिदेहस्य स्वरूपहरणक्षमम् ॥

द्विजो दक्षिणदेशीयो नवग्रामविनिर्मित ।
हलायुधबुध शभोरिमा स्तुतिमचीकरत् ॥

क

महाकालवन सेवे कदाचित्फलमिच्छया ।
ससारभ्रमोपेतश्रमापहरणे क्षमम् ॥

अट्टहासमहाकालसित कौवेद्वये तत ।
एक कारणमुत्पत्तिरुपचारै प्रवर्तके ॥

द्विजो दक्षिणराधेयो वनग्रामविनिर्मित ।
हलायुधमिद शम्भोरिमा स्तुतिमजाग्रदत् ॥

श्रान्तो जोष स्थित । यद्वा ससारचक्रभ्रमणेन श्रान्तस्सन् । त्वद्गुणकीर्तनात् त्वदीयगुणस्तुते । किमपि यत् किञ्चित्पुण्य मया हलायुधेन उपार्जित समुपार्जितम् । तेन सुकृतेन । स्तात् भूयात् । आशीर्लिङ् । भवनान्तरेऽपि जन्मान्तरेऽपि । हे गिरिश ! त्वय्येव भक्तिर्मम ।

अत्रत्थं पदयोजना—अपि च कथनान्तरे । शिशोरेकाक्षरजल्पितैरपि पितु, प्रीतिर्भवेत् तस्मान्मलीमसमपि मद्वचनं तव तुष्टिहेतु स्यादेवेति विचिन्त्य ससारचक्रे श्रान्तस्सन् अह त्वद्गुणकीर्तनात् किमपि यत्पुण्य मयोपर्जित तेन भवनान्तरेऽपि मम त्वयि भक्तिरेव स्तात् । भक्तिरेव प्रार्थ्यते प्रमथाधिपत्यादिकमपि न प्रार्थ्यत इति भाव ॥ ६५ ॥

अत्र स्तुतौ कतिभि श्लोकैरिन्द्रादिलोकप्राप्तिरेव प्रार्थ्यत इत्यनेन सारूप्यमुक्तिरुक्ता । कतिभि श्लोकै कैलासप्राप्तिर्न याच्यते अपि तु सदाशिवो याच्यत इत्युक्तम् । अनेन सामीप्यमुक्तिरुक्ता । कतिभि श्लोकै प्रमथाधिपत्यप्रार्थनया सालोक्यमुक्तिरुक्ता । कतिभिरनेकै श्लोकै सायुज्यमुक्ति प्रतिपादिता तत्र कतिभि श्लोकै सायुज्यमुक्तिर्दूषिता सेव्यसेवकभावेनावस्थानमेव सम्यगिति प्रतिपादितम् । अन्तिमै कतिभि श्लोकैर्भक्तिरेव प्रार्थ्यते न तु पञ्चविधानमुक्ति प्रार्थनीया ।

भक्तौ प्रार्थितायामीश्वरानुग्रहवशाद्भक्तिर्दृढा चेत् परमेश्वर एव भक्तमनुधावति नतु भक्त परमेश्वरम् । 'वत्स गौरिव गौरीशो धावन्तमनुधावति' इति स्मृते । अतो भक्ते परतन्त्र परमेश्वर इति माहेश्वरपाशुपतमतसिद्धान्त । एतन्मतमेवावलम्ब्य भट्टहलायुधेन स्तोत्रमुट्टङ्कितमिति निरटङ्कि ।

हलायुधकृतेष्टीकामकरोदाकरो गिराम्
लक्ष्मीधरकटाक्षेण देचयामात्यशेखर ॥

॥ हयायुधस्तोत्र तद्व्याख्या च सपूर्णा ॥

॥ शुभमस्तु ॥